[illegible]

कांमस्कतादिनिर्मितानि शंखश्चकाराच्छुद्धिश्चेत्येतानि [illegible] जलैः प्रक्षालनीयानि सुलेपानि पाषाणेन घर्षणीयानि २७ मृ
ण्मयादिशुद्धिमाह मृण्मय इति मृण्मयं पात्रमुच्छिष्टलेपोपह

आयसेष्वायसानां च सीसस्याग्नौ विशोधनं दंतास्थि
तथा शृंगाणां रौप्यसौवर्णभाजनं २६ मणिपात्राणि शं
खश्चेत्येतान्प्रक्षालयेज्जलैः पाषाणे तु संघर्षैः शु
द्धिरेषामुदाहृता २७ मृण्मये दहनाच्छुद्धिर्धान्यानां मा
र्जनादपि २८ वेणुवल्कलचीराणां क्षौमकार्पासवास
सां और्णनेत्रपटानां च प्रोक्षणाच्छुद्धिरिष्यते २९ मु
ञ्जोपस्कारशूर्पाणां शणस्य फलचर्मणां तृणकाष्ठस्य
रज्जूनामुदकाभ्युक्षणं मतं ३० तूलिकाद्युपधानानि र
क्तवस्त्रादिकानि च शोषयित्वार्कतापेन प्रोक्षणाच्छुद्धि
तामियुः ३१ मार्जारमक्षिकाकीटपतंगकृमिदर्दुराः मे
ध्यामेध्यं स्पृशंतोपि न दोषो मनुरब्रवीत् ३२ महीं स्पृष्ट्वा
गतं तोयं याश्चाप्यन्योन्यविप्रुषः भुक्तोच्छिष्टं तथा स्नेहं
नोच्छिष्टं मनुरब्रवीत् ३३ तांबूलेक्षुफले चैव भुक्तस्नेहानु
लेपने मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः ३४
रथ्याकर्दमतोयानि नावः पंथास्तृणानि च ॥ ॥ ॥

तं पुनर्दहेनच्छुद्धमिति चांडालादिस्पृष्टं परित्याज्यमेव २८ वेणुश
ब्देन वेणुकार्याणि कटव्यजनादीनि वल्कलं चीरं [illegible] वासिनां
प्रसिद्धानि क्षौमं अतसीत्वनिर्मितं वस्त्रं कार्पासवासः प्रसिद्धं और्णं

[illegible]

३४

[illegible]

न्दंष्ट्रो आश्लानाद्यभावेविधिवत्कर्माचरेत्स्वस्थः ३६ इदानीमुक्त
श्लोकविषयमाह देशेति देशभंगःपरसैन्यागमे प्रवासोदेशांतरग
मनेनपरगृहेवासः व्याधयोज्वरादयः व्यसनानिस्वामिकोपादिज
नितानि एतेषुप्रसंगेषुशुद्धिंनविचार्यकिंतुस्वदेहपुत्रकलत्रादिरक्षा

माउतार्केणाप्युडांतिपक्वेष्टकचितानि च ३५ अदु।
ष्टासंततांधारावातोद्धताश्चरेणव द्वियोद्गम
थावालानदुष्यंतिकदाचन ३६ देशभंगेप्रवासेवा
व्याधिषुव्यसनेष्वपि रक्षेदेवस्वदेहादिपश्चाद्धर्मंस
माचरेत् ३७ येनकेनचधर्मेणमृदुनादारुणेनवं उ
द्धरेद्दीनमात्मानंसमर्थोधर्ममाचरेत् ३८ आपत्का
लेतुनिस्तीर्णेशौचाचारंविचिंतयेत् शुद्धिंसमुद्धृ
त्यपश्चात्स्वस्थोधर्मंसमाचरेत् ३९ इतिश्री·द्वापा।
शर्लीसमप्तमोध्यायः ७ गवांबंधनयोक्त्रेषु भवेन्मृ।
रकामतः अकामकृतपापस्यप्रायश्चित्तंकथंभवे
त् १ वेदवेदांगविदुषांधर्मशास्त्रंविजानताम्
स्वकर्मरतविप्राणांस्वकंपापंनिवेदयेत् २ सा
वित्र्याश्चैवगायत्र्याःसंध्योपास्त्यग्निकार्ययोः अ
ज्ञानात्कृषिकारीब्राह्मणोनामधारका ३ ग्रा

कार्या आपन्निस्तीर्णेतुप्रायश्चित्तंकुर्यात् ३७ अधुनामुख्य
गौणयोरपिकल्पयोर्विषयमाह येनेति मृदुनासुकरेण।
यथोपपन्नदेशकालद्रव्यात्मसाध्येन दारुणेनदुःकरेण। ये

नामधारक विप्राणां पर्षत्वनास्तीत्याह द्वाभ्यां सावित्र्या इति तत्सवितु
र्वरेण्यमित्यादि सावित्री तत्सवितुर्वृणीमहे इत्याद्या वा गायत्री संध्यावंदन समि
दाधान रूपमग्निकार्यंच एषांमस्तानतीयाजनाध्यापनादिरूपमंम

अव्रतानाममंत्राणांजातिमात्रोपजीविनां सहस्रशस्स
मेतानांपरिषत्वंनविद्यते ४ तद्वदंतिद्विजामूढामूर्खा
धर्ममतद्विदः तत्पापंशतधाभूत्वातद्वक्तॄनधिगच्छति
५ अज्ञात्वाधर्मशास्त्राणिप्रायश्चित्तंददातियः प्रायश्चि
त्तीभवेत्पूतः किल्बिषंपर्षदिव्रजेत् ६ चत्वारोवात्रयोवा
पियंब्रूयुर्वेदपारगाः सधर्मइतिविज्ञेयोनेतरैस्तुसहस्र
शः ७ प्रमाणमार्गंमार्गंतोयेधर्मंप्रवदंतिवै तेषामुद्वि
जतेपापंसद्भूतगुणवादिनां ८ यथाश्मनिस्थितंतोयं
मारुतार्केणशुष्यति तथैवपर्षदादेशान्नाशयेन्नश्यति
नान्यथा ९ नैवगच्छतिकर्तारंनैवगच्छतिपर्षदम्
मारुतार्कादिसंयोगात्पापंगच्छतितोयवत् १० चत्वा
रोवात्रयोवापिवेदवंतोग्निहोत्रिणः ब्राह्मणानांसमर्थाये
परिषत्साविधीयते ११ अनाहिताग्नयोयेन्येवेदवेदांगपा
रगाः पंचत्रयोवाधर्मज्ञाःपरिषत्साप्रकीर्तिता १२

वान् येजीवनायकर्षिमाश्रयंति तेनामधारकाः जातिमात्राश्रय
त्वात् ३ लक्षणमुक्त्वाव्यावर्त्यमाह अव्रतानामिति सोमप्राजाप
त्यादिव्रतहीनाः अनधीतमंत्राश्चनामधारकंचैषांपर्षत्वंनास्ति
४ धर्मशास्त्रविज्ञानतामित्यस्याव्यावर्त्यमाह यद्वदंतीति धर्मश

संख्यां कल्पमाह मुनीनामिति आत्ममननशीला मुनयः आत्म
तेषां तेषामात्मविद्याः द्विजा विप्राः वेदेषु ऋगादि व्रतेषु सौम्य
प्राजापत्यादिषु स्नाताः स्नातसमावर्तनाः तेषां मध्ये एकोपि परिष

मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनां वेदव्र
तेषु स्नातानामेकोपि परिषद्भवेत १३ पंचपूर्वं मया
प्रोक्ता स्तेषां वा संभवे त्रयः स्ववृत्तिपरितुष्टा ये परिषत्
सा प्रकीर्तिता १४ अत ऊर्ध्वं तु ये विप्राः केवलं नाम
धारकाः परिषत्वं न तेषामस्ति सहस्रगुणितेष्वपि १५
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ब्राह्मणस्
त्वनधीयानस्त्रयस्ते नामधारकाः १६ ग्रामस्थानं य
था शून्यं यथा कूपस्तु निर्जलः यथा हुतमनग्नौ च अ
मंत्रो ब्राह्मणस्तथा १७ यथा षंढोऽफलः स्त्रीषु यथा
गौरुषराऽफला यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचो
ऽफलः चित्रकर्म यथानेकैरंगैरुन्मील्यते शनैः ब्राह्म
ण्यमपि तद्वद्धि संस्कारैर्मंत्रपूर्वकैः १९ प्रायश्चित्तं प्रय
च्छंति ये द्विजा नामधारकाः ते द्विजाः पापकर्माणः समे
ता नरकं प्रयुः २० ये पठंति द्विजा वेदं पंचयज्ञरताश्च ये
त्रैलोक्यं तारयंत्येते पंचेंद्रियरता अपि २१ संप्रणीतः श्म
शानेषु दीप्तोग्निः सर्वभक्षकः तथा च वेदविद्विप्रः सर्व
भक्षोपि दैवतं २२

द्भवति १३ गणनः सं ख्यां तत्रस्थानकल्प
माह पंचेति श्लोकत्रयेण पंचपरिषत्पक्षा उक्तास्तेषामसंभवे आ
पत्काले पि स्ववृत्तिमात्रेण तत्मन्मात्रेण परितुष्टास्त्रयः परिषत्सं

३८

त्रमेधानितु सर्वाणि प्रक्षिप्यंते यथोदके तथैव कि
ल्बिषं सर्वं प्रक्षिपेच्च द्विजानले २३ गायत्र्या रहितो
विप्रः शूद्रादप्यशुचिर्भवेत् गायत्रीब्रह्मतत्वज्ञाः सं
पूज्यंते जनैर्द्विजाः २४ दुःशीलोपि द्विजः पूज्यो न तु शू
द्रो जितेंद्रियः कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं ख
रीं २५ धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः क्रीडा
र्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः २६ चातुर्वैद्यो वि
कल्पी च अंगविद्धर्मपाठकः त्रयश्चाश्रमिणो मुख्याः
पर्षदेषा दशावरा २७ राज्ञश्चानुमते स्थित्वा प्राय
श्चित्तं विनिर्दिशेत् स्वयमेव न कर्तव्यं कर्तव्या स्वल्प
निष्कृतिः २८ ब्राह्मणांस्तानतिक्रम्य राजा कर्तुं यदी
च्छति तत्पापं शतधा भूत्वा राजानमनुगच्छति २९ प्राय
श्चित्तं सदा दद्याद्देवतायतनाग्रतः आत्मकृच्छ्रं ततः
कृत्वा जपेद्वै वेदमातरं ३० सशिखं वपनं कृत्वा त्रिसं
ध्यमवगाहनं गवां मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनु
व्रजेत् ३१ उष्णे वर्षति शीते वा मारुते वाति वा भृशं
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ३२

त्रैलोक्यं तारयंतीति यदुक्तं तद्दृष्टांतेनोपपादयति नायोक्ष्त्र
पुरीषाभ्यामिति स्मरणात् क्षिप्तामेध्यान्यपि जलानि स्वयंपूता
न्येतान्यपावयंति तथा पापनिवेदनेपि स्नातः एत एव विप्राः पापि

आत्मनोयदिवान्येषांगृहेक्षेत्रेतथाखले भक्षयंती
नवार्यतेपिबंतीचैववत्सकं ३३ पिबंतीचपिबेत्तोयं
संविशंतीचसंविशेत् पतितांपंकलग्नांवासर्वप्राणैःस
मुद्धरेत् ३४ ब्राह्मणार्थेगवार्थेवासद्यःप्राणान्परि
त्यजेत् मुच्यतेब्रह्महत्यायागोप्तागोब्राह्मणस्यच ३५
गोवधस्यानुरूपेणप्राजापत्यंविनिर्दिशेत् प्राजापत्यं
ततःकृच्छ्रंविभजेत्चतुर्विधं ३६ एकाहमेकभक्ता
शीएकाहंनक्तभोजनः अयाचितास्त्वेकमहरेकमहं
मारुताशनः दिनद्वयंचैकभक्तोद्विदिनंनक्तभोजनः
दिनद्वयमयाचीस्याद्विदिनंमारुताशनः ३८ त्रि
दिनंचैकभक्ताशीत्रिदिनंनक्तभोजनः दिनत्रयमया
चीस्यात्त्रिदिनंमारुताशनः ३९ चतुरहंत्वेकभक्ता
शीचतुरहंनक्तभोजनः चतुर्दिनमयाचीस्याच्चतुरहंमा
रुताशनः ४० प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभो
जनं विप्राणांदक्षिणांदद्यात्पवित्राणिजपेद्द्विजः
४१ ब्राह्मणान्भोजयित्वातुगोघ्नःशुद्धोनसंशयः ४२
इतिश्रीपाराशरधर्मशास्त्रेऽष्टमोऽध्यायः ८ गवां
संरक्षणार्थायनदुष्येद्रोधवंधयोः तद्वधंतुनतंविद्या
त्कामाकामकृतंतथा १

पिपासितोगवांजलपानात्प्राक्नपिबेत् श्रांतोपिगवामप्रवेशना
प्राङ्नोपविशेत् पतितांपंकलग्नांचप्राणादिकैरपियत्नैःसमु

अकामतोरोधादत्युक्तप्रायश्चित्तस्य द्वैगुण्यमाह दंडादिति दंडोऽंगुष्ठमात्रस्थूल इत्यादिवक्ष्यमाणस्तस्मादधिकप्रमाणो नात्पेन तु कुठारादिना प्रहाराद्यदि गां पातयेत्तदा अकाम कृते यत्प्रायश्चित्तमुक्तं ततो द्विगुणं चरेत् तथाचाकामतो पादः एकः पादकामतो द्वौ अकामतो वंधने द्वौ पादौ कामतश्चत्वारः अकामतो योक्त्रे त्रयः पादाः

दंडादूर्ध्वं यदन्येन प्रहाराद्यदि पातयेत् प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधे चरेत् २ रोधवंधनयोक्त्राणि घातश्चेति चतुर्विधं एकपादं चरेद्रोधे द्वौ पादौ बंधने चरेत् योक्त्रेषु पादहीनं स्याच्चरेत्सर्वं निपातने ३ गोवाटे वा गृहे वापि दुर्गेष्वथ समस्थले नदीष्वथ समुद्रेषु त्वन्येषु च नदीमुखे. ४ दग्धदेशे मृता गावस्तंभनाद्रोध उच्यते योक्त्रे दामकडोरैश्च कंठाभरणभूषणैः ५ गृहे वापि वने वापि बद्धः स्याद्गौर्मृतो यदि तदेव बंधनं विद्यात्कामाकामकृतं च यत् ६ हले वा शकटे पंक्तौ पृष्ठे वा पीडितो नरैः गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्वधः ७ मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः कामाकामकृतक्रोधाद्दंडैर्हन्यादथोपलैः ८ प्रहतो वा मृतो वापि तद्धि हेतुर्निपातने अंगुष्ठमात्रः स्थूलस्तु बाहुमात्रप्रमाणतः ९ आर्द्रस्तु पलाशश्च दांड इत्यभिधीयते १० स १०

कामतः षट् अकामतो घाते प्राजापत्यः कामतो द्वाविति यद्यप्यत्र कामत इति न श्रूयते तथाप्यकामप्रायश्चित्तस्य द्वैगुण्यविधानं का

४०

ह्रेपुनस्तुपादानं सत्वाकवोधनार्थम् ह्रेसोदंड इत्यर्थः १० उणयोगेण
कवंडेनाभिहतस्यमरणोक्तत्रायश्चित्ताभावमाह मूर्छितइति योगौ
पूर्वमेवव्याधुस्पृष्टोयथोक्तदंडेन ताडितोमूर्छितःपतितोवाभवतिसए

मूर्छितःपतितोवापिदंडेनाभिहतःसतः उत्थितस्तु
यदागच्छेत्पंचसप्तदशाथवा ११ ग्रासंवायदिगृह्णीया
त्तोयंवापिपिवेद्यदि पूर्वव्याध्युपसृष्टश्चेत्प्रायश्चित्तं
नविद्यते १२ पिंडस्थेपादमेकंतुद्वौपादौगर्भसंमिते
पादोनंव्रतमुद्दिष्टंहत्वागर्भमचेतनं १३ पादेंगरोम
वपनंद्विपादेश्मश्रुणोपिच त्रिपादेतुशिखावर्जंस
शिखंतुनिपातने १४ पादमेकंत्रयंगंचैवद्विपादंकां
स्यभाजनं त्रिपादेगोवृषंदद्याच्चतुर्थेगोद्वयंस्मृतं १५
निष्पन्नसर्वगात्रस्तुदृश्यतेवासचेतनः अंगप्रत्यंगसं
पूर्णोद्विगुणंगोव्रतंचरेत् १६ पाषाणेनैवदंडेनगा
वोयेनाभिघातिताः शृंगभंगेचरेत्पादंद्वौपादौनेत्रघा
तने १७ लांगूलेपादकृच्छ्रंतुद्वौपादावस्थिभंजने
त्रिपादंचैवकर्णेतुचरेत्सर्वनिपातने १८ शृंगभंगेऽस्थि
भंगेचकटिभंगेतथैवच यदिजीवतिषण्मासान्प्रायश्चि
त्तंनविद्यते १९ व्रणभंगेचकर्तव्यःस्नेहाभ्यंगस्तुपा
णिना यवसश्चोपहर्तव्योयावद्दृढबलोभवेत् २०

वधुनस्तुत्थितःसन्नंचसप्तदशपदानिगच्छति अथोछ्यासुमशाकस्तत्रै
वग्रासंतृणादिकंभक्षयेत्तत्राप्यशाकस्तोयंपिवेत् पश्चान्म्रियेत्ता
पितदाप्रायश्चित्तंनभवति उत्थानादिकमशक्तवामरणंतुभवत्येवे

चिकित्सितस्याजीवनानंतरकर्तव्यमाह यावदिति व्रणसंपूर्णतासंप
त्तिपर्यंतं पोषयित्वा मृताशंकानिवृत्तये ब्राह्मणान् दर्शयित्वा यस्मिन्क

यावत्संपूर्णसर्वांगस्तावत्तं पोषयेन्नरः गोरूपं ब्राह्म
णांश्च तं नमस्कृत्वा विसर्जयेत् २१ यद्यसंपूर्णसर्वां
गो हीनदेही भवेत्तदा गोघातकस्य तस्यार्द्धं प्रायश्चि
त्तं विनिर्दिशेत् २२ काष्ठलोष्टकपाषाणैः शस्त्रेणै
वोद्धतो बलात् व्यापादयति यो गां तु तस्य शुद्धिं विनि
र्दिशेत् २३ चरेत्सांतपनं काष्ठे प्राजापत्यं तु लोष्टके त
प्तकृच्छ्रं तु पाषाणे शस्त्रेणैवातिकृच्छ्रकं २४ पंचसांत
पने गावः प्राजापत्ये तथा त्रयः तप्तकृच्छ्रे भवंत्यष्टा
वतिकृच्छ्रे त्रयोदश २५ प्रमापणे प्राणभृतां दद्यात्
तत्प्रतिरूपकं तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवी
न्मनुः २६ अन्यत्रांकनलक्ष्माभ्यां वाहने मोचने तथा
सायं संगोपनार्थं च न दुष्येद्रोधबंधयोः २७ अतिदाहे
तिवाहे च नासिकाभेदने तथा नदीपर्वतसंचारे प्राय
श्चित्तं विनिर्दिशेत् २८ अतिदाहे चरेत्पादं द्वौ पादौ
वाहने चरेत् नासिके पादहीनं तु चरेत्सर्वं निपातने
२९ दहनात्तु विपद्येत अनड्वान्योक्त्रयंत्रितः उक्तं
पराशरेणैव ह्येकं पादं यथाविधि ३० ३०

मेचिद्दद्यात् २१ सम्यक्चिकित्सिताऽपि मरणे प्रायश्चित्तमाह यदीति व्रणसंपूर्णतायाः अभावे यदि म्रियेत तदा प्राजापत्यमर्द्धं दिशेत् २

…कानि वधनिमित्तान्यभिक्षेपायोपसंहरति रोधनमिति भारोभिवा
…हः प्रहरणमेतत्तालक्षणोपघातः दुर्गप्रेरणं नदीघातसंचारः रोध
…दित्याख्याति षट्प्रायश्चित्तनिमित्तानि अवशिष्टमस्यानुवादाय

…रोधनं बंधनं चैव भारप्रहरणं तथा दुर्गप्रेरणयोक्त्र…
…निमित्तानि वधेषु षट् ३१ बंधपाशसुगुप्तांगो म्रि…
…यते यदि गोपशुः भवने तस्य पापी स्यात् प्रायश्चित्ता…
…र्धमर्हति ३२ न नारिकेलेन न शाणवालेन न वापि मौ…
…ञ्जेन न वङ्क्रश्रृंखलैः एतैस्तु पाशैर्न निबंधनीया बद्ध…
…तिष्ठेत्पशुं गृहीत्वा ३३ कुशैः काशैश्च बध्नीया…
…त्पशुं दक्षिणामुखं पाशलग्नाग्निदग्धेषु प्रायश्चित्तं…
…न विद्यते ३४ यदि तत्र भवेत्काष्ठं प्रायश्चित्तं कथं भवेत्
…जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात् ३५ प्रेरय…
…कूपवापीषु वृक्षच्छेदेषु पातयन् गवाशनेषु विक्रीणं…
…स्ततः प्राप्नोति गोवधं ३६ आराधितस्तु यः कश्चिद्भि…
…कक्षो यदा भवेत् श्रवणं हृदयं भिन्नं मग्नो वा कूपसंकटे
…कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः स एव म्रिय…
…ते तत्र त्रीन्पादांस्तु समाचरेत् ३७ कूपखाते तटाबंधे न…
…दीबंधे प्रपासु च पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते

…तपरिसंख्यातेनातिदाहादेरप्युपसंग्रहः चकारश्रवणात् ३१
…स्वभावतोपि गोमरणे कालेवधसङ्गेवप्रायश्चित्तमाह वधेति
…दिगोजानीयो वंधहेतुना पाशेन संवद्धा लवरणादिर्गृहेम्रि…
…त तदाङ्गवनस्वामी गोस्वामी पापी स्यात् सर्वोक्तप्रायश्चित्त

…तानी …त्रिपानीयार्थं स्वतः प्रवृत्तानां मरणे दोषो नास्ति समक्ष निवारणे तु दोषो स्त्येव ३९

एतत्प्रयोदितस्य प्रायश्चित्तस्य क्वचिदपवादमाह वेश्मेति प्रवेशनिर्गम
स्थानं द्वारं गोशालादिनिर्गमः तत्र यः स्वनिमित्तकार्यार्थं गृहं खाते
षु न प्रायश्चित्तमस्त्येव ४० भौत्यवैभवमाह निशेति रात्रौ संरक्षणा
य पाशादिभिर्बद्धाः गोशालायां निरुद्धाः तत्र सर्पादिहतेषु प्रायश्चि
त्तं नास्ति इदं निवारणार्थं कृतप्रयत्न विषमं दहनात् विपद्येत तत्पादि

वेश्मद्वारे निवासेषु यो नरः खातुमिच्छति स्वकार्यं गृह
खातेषु प्रायश्चित्तं विनिर्दिशेत् ४० निशि बन्धनिरुद्धे
षु सर्पव्याघ्रहतेषु च अग्निविद्युद्विपन्नेषु प्रायश्चित्तं न
विद्यते ४१ ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने अ
तिवृष्टिहतानां च प्रायश्चित्तं न विद्यते ४२ संग्रामे प्रह
तानां च ये दग्धा वेश्मकेषु च दावाग्निग्रामघातेषु प्रा
यश्चित्तं न विद्यते ४३ यन्त्रिता गौश्चिकित्सार्थं मूढग
र्भविमोचने यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते
४४ व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि वा भिषङ्मि
थ्योपचारे च प्रायश्चित्तं विनिर्दिशेत् ४५ गोवृषाणां
विपत्तौ च यावन्तः प्रेषका जनाः अनिवारयतां तेषां
सर्वेषां पातकं भवेत् ४६ एको हतो यैर्बहुभिः समेतैर्न
ज्ञायते यस्य हतोऽभिघातात् दिव्येन तेषामुपलभ्य हन्ता
निवर्तनीयो नृपसन्नियुक्तैः ४७ एका चेद्बहुभिः काचिद्दै
वाद्व्यापादिता क्वचित् पादं पादं तु हत्यायाश्चरेयुस्ते

[illegible] ४८

कृतप्रयत्नस्य प्रायश्चित्तोपदेशात् ४१ ग्रामघात इति शत्रुभिः पर
ग्रामे हन्यमाने शरैर्ग्रामान्तः स्थितानां गवां निपातने भ्रमादि शैथिल्ये

वनिमित्तन्वनात्वेननिमित्तिन्नमत इतिसंदेहे कथंनिर्णयइ
त्यत्राह होतेति रुधिरेणप्रहस्य कार्श्येनव्याधिः त्वालादि
मर्थ्यदेशइत्येवमाद्याभियुक्तप्रसिद्धाशान्त्यं नन्वप्रन्नलिंगभावेऽ

हंतुरुधिरंदृष्ट्वा व्याधिग्रस्तःकृशोभवेत् ग्रासार्थं
वादितोवापित्र्यध्वानंनेवगच्छति ४९ मनुनाचैवमे
केनसर्वशास्त्राणिजानता प्रायश्चित्तंतुतेनोक्तंगोघ्न
चांद्रायणंचरेत् ५० केशानांरक्षणार्थायद्विगुणं
तमाचरेत् द्विगुणेव्रतआदिष्टेदक्षिणाद्विगुणाभवे
त् ५१ राजावाराजपुत्रोवाब्राह्मणोवाबहुश्रुतः अकृत्वाव
पनंतेषांप्रायश्चित्तंविनिर्दिशेत् ५२ सर्वान्केशान्समु
द्धृत्यछेदयेदंगुलद्वयं एवंनारीकुमारीणांशिरसोमुं
डनंस्मृतं ५३ नस्त्रियाःकेशवपनंनदूरेशयनाशनं
नं नचगोष्ठेवसेद्रात्रौनदिवागाश्चानुव्रजेत् ५४ न
दीषुसंगमेचैवअरण्येषुविशेषतः नस्त्रीणामजिनं
वासोव्रतमेवसमाचरेत् ५५ त्रिसंध्यंस्नानमित्युक्तं
सुराणामर्चनंतथा बंधुमध्येव्रतंतासांकृच्छ्रचांद्राय
णादिकं ५६ गृहेषुनियतांतिष्ठेच्छुचिर्नियममाचरेत्



णावयवभंगः कथंज्ञेयइत्यत्राह ग्रासार्थमिति इष्टग्रासार्थम
पिनगच्छति वाचाप्रेरितोऽप्यध्वानंनयातिचेदंतःपीडावानिति
ज्ञेयं ४९ नन्वनेकेषुकिंव्रतमुपदेष्टव्यमित्यत्राह मनुनेति ये
षुनिमित्तेषुमनुःप्रायश्चित्तमुक्तंतेषुतदेवानुष्ठेयं अन्येषुनि
मित्तेषुमनुनासर्वशास्त्रार्थतत्त्वज्ञेन एकेनसकलमनिमुक्ता

व्रतानुष्ठानकाले स्थितिमाह गृहेष्विति गृहांतिकेषु वसेत् गृहांतिके दैपइतियोगीश्वरस्मरणात् शुचिः पापांतरमकुर्वतो नियममास्थ प्रायश्चित्तं कुर्यात् ५७ उक्तप्रायश्चित्तस्याकरणे पापमाह इहेति इह काले यो गोवधं कृत्वा प्रच्छादयितुं रहस्य प्रायश्चित्तेनापाक र्तुमिच्छति स काल सूत्रकं घोरं नरकं निश्चितं प्राप्नोति ५८ नर्को

इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति सयाति नर
कं घोरं कालसूत्रमसंशयं ५८ विमुक्तो नरकात्त
स्मान्मर्त्यलोके प्रजायते क्लीबो दुःखी च कुष्ठी च स
प्तजन्मनि वै नरः ५९ तस्मात्प्रकाशयेत्पापं स्वधर्मं
सततं चरेत् स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विवर्जये
त् ६० इति श्री गोरक्षार्थं गोविपत्तिप्रायश्चित्तव
र्णनो नाम नवमोऽध्यायः ९ चातुर्वर्ण्येषु सर्वेषु हिताः
क्ष्यामि निष्कृतिं अगम्यागमने चैव शुद्धै चांद्रायणं
चरेत् १ एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्द्धये
अमावास्यां न भुंजीत ह्येष चांद्रायणो विधिः २ कु
क्कुटांडप्रमाणं तु ग्रासं वै परिकल्पयेत् अन्यथा जा
त दोषेण न धर्मो न च शुद्ध्यति ३ प्रायश्चित्ते ... र्य
कुर्याद्ब्राह्मणभोजनं गोद्वयं वस्त्रयुग्मं च दद्याद्विप्रे
षु दक्षिणां ४ चंडालीं वा श्वपाकीं वा ह्यनुगच्छति यो
द्विजः त्रिरात्रमुपवासित्वा विप्राणामनुशासनात् ५

गानंतरं मनुष्यलोके नरो भूत्वा नपुंसकस्तत्रापि कुष्ठी दुःखी च सप्त जन्मानि स्वकर्मणा जायत इति कलौ रहस्य प्रायश्चित्तस्यानिंदितत्वा ५९ उक्तस्य सर्वविषयितां स्पष्टयितुं सामान्येनोपसंहरति तस्मादि

४६

६ अनिर्देश्यप्रायश्चित्तमाह क्षत्रिय इति त्रिरात्रमुपवासं कृत्वा सशिखं व-
पनं कृत्वेति चानुवर्तते गोद्वयं वृषभद्वयं च गोमिथुनद्वयस्य स्पष्टमन्यत् ७
शूद्रस्याह श्वपाकीं वाथ चांडालीं शूद्रो वेति एवं प्राजापत्यं कृत्वा

मुण्डनं वपनं कृत्वा प्राजापत्यद्वयं चरेत् गोद्वयं दक्षि-
णां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ६ क्षत्रियो वाथ वैश्यो
वा चांडालीं गच्छतो यदि प्राजापत्यद्वयं कुर्याद्दद्याद्गो-
मिथुनद्वयं ७ श्वपाकीं वाथ चांडालीं शूद्रो वा यदि
गच्छति प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं चरेत् ८ मा-
तरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा एतास्तु मोहितो म-
त्वा त्रीणि कृच्छ्राणि संचरेत् ९ चांद्रायणत्रयं कुर्या-
च्छिश्नच्छेदेन शुद्ध्यति मातृष्वसृगमे चैवमात्ममेढ्र-
निकृंतनं १० अज्ञानेन तु यो गच्छेत्कुर्याच्चांद्रायणत्र-
यं दशगोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत् ११ पितृ-
दारान्समारुह्य मातुराप्तां तु भ्रातृजां गुरुपत्नीं स्नु-
षां चैव भ्रातृभार्यां तथैव च १२ मातुलानीं सगोत्रां
च प्राजापत्यद्वयं चरेत् गोद्वयं दक्षिणां दत्वा मुच्य-
ते नात्र संशयः १३ पशुवेश्यादिगमने महिष्युष्ट्री
कपी तथा खरीं च शूकरीं गत्वा प्राजापत्यद्वयं चरे-
त् १४ महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुद्ध्यति
गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददेत् १५

चत्वारो गावः स्त्रीरूपाः पुरुषरूपाश्च दद्यात् ८ अज्ञानतो मात्रादिगमनं प्राह
मातरमिति माता जननी अन्यासां वक्ष्यमाणत्वात् अगान्येवोद

पदवाच्यः समोऽयं दुर्भिक्षमशुनीभावः जनक्षयोमारिकाः

ग्रामे स्मिन्स्वदेशे चापि दुर्भिक्षे वा जनक्षये बंदिग्राहे भ-
यार्तो वा सदा स्वस्त्रीं निरीक्षयेत् १६ चांडालैः सह
संपर्कं या नारी कुरुते ततः विप्रान्दश वरान्कृत्वा स्व-
यं दोषं प्रकाशयेत् १७ आकंठसम्मिते कूपे गोमयोद-
ककर्दमे तत्र स्थिता निराहारा त्वहोरात्रेण निष्क्रमे-
त् १८ सशिखं वपनं कृत्वा भुंजीयाद्यावकौदनं त्रिरात्र-
मुपवासित्वा त्वेकरात्रं जले वसेत् १९ शंखपुष्पील-
तामूलं पत्रं वा कुसुमं फलं सुवर्णं पंचगव्यं च क्वाथ-
यित्वा पिबेज्जलं २० एकभक्तं चरेत्पश्चाद्यावत्पुष्पव-
ती भवेत् व्रतं चरति तद्यावत्तावत्संवसते बहिः २१
प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनं गोद्वयं द-
क्षिणां दद्याच्छुद्धिः पाराशरोऽब्रवीत् २२ चातुर्वर्ण्य-
स्य नारीणां कृच्छ्रं चांद्रायणं व्रतं यथा भूमिस्तथा ना-
री तस्मात्तां न तु दूषयेत् २३ बंदीग्रहेण भुक्ता या ह-
त्वा बद्ध्वा बलाद्भयात् कृत्वा सांतपनं कृच्छ्रं शुद्ध्येत्पाराश-
रोऽब्रवीत् २४ सकृद्भुक्ता तु या नारी नेच्छंती पापकर्मभिः
प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च २५ पतत्यर्द्धं
शरीरस्य यस्य भार्या सुरां पिबेत् पतितार्द्धशरीरस्य नि-
ष्कृतिर्न विधीयते

ग्राहो बलाद्दासीकरणं | भयार्तिश्चोरराजा

५६

तपन लक्षणमाह गोमूत्रमिति सप्तरात्रसाध्यमिदं एकाहसाध्य
मेकं संबुध्य विवक्षणात् २७ एकैकं प्रत्यहं पीत्वेति जाबालस्मरणात्
त्रिरात्रसाध्यमपि शाखुप परेह्यपवसेदिति याज्ञवल्क्यस्मरणात् अन्
योर्यथायोग विनियोगो द्रष्टव्यः २८ गर्भपातने प्रायश्चित्तमाह पात्रे

गायत्रीं जपमानस्तु कृच्छ्रं सांतपनं चरेत् गोमूत्रं गोम
यं क्षीरं दधि सर्पिः कुशोदकं २७ एकरात्रोपवासश्च
कृच्छ्रं सांतपनं स्मृतं २८ जारेण जनयेद्गर्भं मृते त्यक्ते
गते पतौ तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीं २९
ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता स्नानं तस्याः
समुद्दिष्टं न तस्या गमनं पुनः ३० कामान्मोहान्नं यश्च
शिपत्नं बंधून्सुतान्पतिं सापि लोकान्परे लोके मानुषे
ष्वविशेषतः ३१ मदमोहगतां नारीं क्रोधाद्दंडादि ता
डितां अद्वितीयगतां चैव पुनरागमनं भवेत् ३२ दश
मे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते दशाहं न त्यजेन्नारीं
त्यजन्नष्टश्रुतां तथा ३३ भर्ता चैव चरेत्कृच्छ्रं कृच्छ्रार्द्धं
चैव बांधवाः तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुद्ध
ति ३४ ब्राह्मणी तु यदा गच्छेत्परपुंसा विवर्जिता गत्वा
पुंसां शतं याति त्यजेयुस्तां तु गोत्रिणः ३५ पुंसो यदि
गृहे गच्छेत्तदा शुद्धं गृहं भवेत् पितृमातृगृहं यच्च जारस्यैव

स्मिक स्त्री पत्यो स्तेन तु तदस्ह ३६ केऽप्तत्पक्षे गर्भपरोक्ष
जारेणोत्सृष्टेन निहितं गर्भं जनयेत् तत्काले प्रजनयेत्तां पापकारिणीं
समुत्सार्य परराष्ट्रे त्यजेत् २९ पंक्तिदूषित्वाभिचारं प्रत्याह ब्राह्मणी
ति रक्षितं न यापिता विन्ना पतिः पुत्रास्तु वाडके अभावे तत्पक्ष

र्पणमयतं भवेत् २८

नन्वेवमप्राप्तेकथंतच्छुद्धिरित्यत्राह उल्लिख्येति यस्मिन्गृहेसत्रा
साणिप्रविशति तद्गृहमभूमिभित्त्युल्लिख्यपश्चात्पंचगव्येनसंचये

उल्लिख्यतद्गृहंपश्चात्पंचगव्येनशोधयेत् त्यजेन्मृ
न्मयपात्रंवस्त्रंकाष्ठंचशोधयेत् ३७ संभारान्शोध
येत्सर्वान्गोवालैश्चफलोद्भवान् ताम्राणिपंचगव्येन
कांस्यानिदशभस्मभिः ३८ प्रत्येषामहोरात्रंपंचगव्यं
चशोधनं प्रायश्चित्तंचरेद्विप्रोब्राह्मणैरुपपादितं ३९
गोद्वयंदक्षिणांदद्यात्प्राजापत्यद्वयंचरेत् उपवासैर्व्र
तैःपुण्यैःस्नानसंध्यार्चनादिभिः ४० जपहोमदयादानैः
शुद्ध्यंतेब्राह्मणादयः ४१ आकाशंवायुरग्निश्चमेध्यंभूमि
गतंजलं नदुष्यंतिचदर्भाश्चयज्ञेषुचमसायथा ४२ इ
तिश्री अगम्यागमनादिप्रायश्चित्तंदशमोऽध्यायः १०
अमेध्यरेतोगोमांसंचांडालान्नमथापिवा यदिभुक्तं
विप्रेणकृच्छ्रंचांद्रायणंचरेत् १ तथैवक्षत्रियोवैश्योप्य
र्द्धंचांद्रायणंचरेत् शूद्रोप्येवंयदाभुंक्तेप्राजापत्यंस
माचरेत् २ पंचगव्यंपिबेच्छूद्रोब्रह्मकूर्चंपिबेद्द्विजः एक
द्वित्रिचतुर्गोवादद्याद्विप्रादनुक्रमात् ३ शूद्रान्नंसूत
कान्नंचअभोज्यस्यान्नमेवच शंकितंप्रतिषिद्धान्नंपूर्वो
च्छिष्टंतथैवच ४

तत्रस्थितंमृण्मयंपात्रं सर्वंत्यजेत् वस्त्रंकाष्ठं
चोक्तप्रकारेणशोधयेत् ३७ संभारानिति सुपक्वोल्खलादीन्द्रव्य
शुद्धिप्रकारेणैवशोधयेत् नारिकेलादिफलसंभवान्पात्रविशेषान्गो
वालैर्मार्जयेत् ताम्रपात्राणिपंचगव्यैः कांस्यपात्राणिदशवारभस्म

५०

अभोज्यस्य कदर्यादेरन्नं भुक्तं भोज्याभोज्यत्वेन संदिग्धं प्रतिषिद्ध-
भक्षितादि पूर्वोच्छिष्टं भक्ताद्यविशिष्टं विप्रेणायज्ञादापदन्नं तत्काला-
भिनसंकटं तु कं तदा ब्रह्मकूर्चं वक्ष्यमाणलक्षणं पावनं शोधकं च-
रेत्समाचरेत् ४।५ एवमुच्छिष्टस्याभोज्यत्वे कंचिद्विशेषमाह बा

यदि भुक्तं तु विप्रेण अज्ञानादापदापि वा । ज्ञात्वा समा-
चरेत्कृच्छ्रं ब्रह्मकूर्चं तु पावनं ५ बालैर्नकुलमार्जारै-
रन्नमुच्छिष्टितं यदा । तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते ना-
त्र संशयः ६ एकपंक्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ७ मोहाद्भु-
ञ्जीत यस्तत्र पंक्तावुच्छिष्टभोजने । प्रायश्चित्तं चरेद्विप्रः कृ-
च्छ्रं सांतपनं तदा । अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्य-
ति ८ पीयूषं श्वेतलशुनं वृंताकफलगृंजनं । पलाण्डुं
वृक्षनिर्यासान्देवस्वकवकानि च ९ उष्ट्रीक्षीरमवी-
क्षीरमज्ञानाद्भुंजते द्विजः । त्रिरात्रमुपवासेन पंचगव्ये-
न शुद्ध्यति १० मंडूकं भक्षयित्वा तु मूषिकामांसमेव
च । ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुद्ध्यति ११ क्ष-
त्रियश्चापि वैश्यश्च क्रियावंतौ शुचिव्रतौ । तद्गृहेषु द्वि-
जैर्भोज्यं हव्यकव्येषु नित्यशः १२ घृतं क्षीरं तथा तैलं गु-
डं स्नेहेन पाचितं । गत्वा नदीतटे विप्रो भुंजीयाच्छूद्रभो-
जनं १३

लैरिति बालाः पंचवर्षाः कवर्षाः पंचवर्षात्परस्तेिति
स्मरणात् नकुलमार्जारौ प्रसिद्धौ बहुवचनात्सकलग्रहणं ते-
रुच्छिष्टीकृतमन्नं तिलदर्भयुक्तैरुदकैः प्रोक्षितं शुद्ध्यतीत्यन्नेस

५१

मद्यमांसरतं नित्यं नीचकर्मप्रवर्त्तकं । तं शूद्रं वर्जये
द्विप्रः श्वपाकमिव दूरतः । १४ द्विजशुश्रूषणरता
न्मद्यमांसविवर्जितान् । स्वकर्मनिरतान्नित्यं ताञ्छू
द्रान्नत्यजेद्द्विजः । १५ अज्ञानाद्भुञ्जते विप्राः सूतके
मृतकेपि वा । प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत्
१६ गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके । वैश्ये
पंचसहस्रेण त्रिसहस्रेण क्षत्रिये । १७ ब्राह्मणस्य यद
भुंक्ते द्विसहस्रेण दापयेत् । अथवा वामदेवेन साम्नैवै
केन शुद्ध्यति । १८ शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आ
हृतं । पक्वं विप्रगृहे भुक्तं भोज्यं तन्मनुरब्रवीत् । १९ आ
पत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि । मनस्तापेन शु
द्ध्येत द्रुपदां वा शतं जपेत् । २० दासनापितगोपालकुल
मित्रार्द्धसीरिणः । एते शूद्रेषु भोज्यान्ना यश्चात्मानं
निवेदयेत् । २१ शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु सं
स्थितः । असंस्काराद्भवेद्दासः संस्कारादेव नापितः । २२
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः । स गोपा
ल इति ज्ञातो भोज्यो विप्रैर्न संशयः । २३ वैश्यकन्या
समुत्पन्नो ब्राह्मणेन तु संस्कृतः । सो ह्यार्धिक इति ज्ञेयो
भोज्यो विप्रैर्न संशयः । २४ अकामतस्तु यो भुंक्ते प्राय
श्चित्तं कथं भवेत् । मांसस्थितमभोज्यानां जलं दधि घृतं प
यः २५

त येपन द्विजशुश्रूषानतपरा मद्यादिसंबंधरहिताः स्वकर्मणि ताव क

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति ब्रह्मकूर्चो
पवासेन यो ज्यावर्णस्य निष्कृतिः २६ शूद्राणां नोप
वासस्यात् शूद्रो दानेन शुद्ध्यति ब्रह्मकूर्चमहोरात्रं श्व
पाकमपि शोधयेत् २७ गोमूत्रं गोमयं क्षीरं दधिस
र्पिः कुशोदकं निर्दिष्टं पंचगव्यं तु पवित्रं पापशोधनं
२८ गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयं पयः
ताम्रवर्णायाः रक्तायाः गृह्यते दधिः २९ कपिलायाः घृ
तं ग्राह्यं सर्वं कापिलमेव वा मूत्रमेकं पलं दद्यादंगुष्ठा
र्धं तु गोमयं ३० क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते
घृतमेकपलं दद्यात्पलमेकं कुशोदकं ३१ गायत्र्या
दद्याद्गोमूत्रं गंधद्वारेति गोमयं आप्यायस्वेति च क्षीरं
दधिक्राव्णस्तथा दधि ३२ तेजोसि शुक्रमित्याज्यं देव
स्यत्वा कुशोदकं पंचगव्यमृचा पूतं स्थापयेदग्निसन्नि
धौ ३३ आपो हिष्ठेति चालोड्य मानस्तोकेति मंथयेत्
सप्तवारास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ३४ एतैरु
द्धृत्य होतव्यं पंचगव्यं यथाविधि इरावती इदं विष्णुर्मा
नस्तोके च शंवती ३५ एताभिश्चैव होतव्यं हुतशेषं पि
बेद्द्विजः आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ३६
उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु यत्त्वगस्थिगतं पा
पं देहे तिष्ठति देहिनां ब्रह्मकूर्चो दहेत्सर्वं प्रदीप्ताग्निरिवें
धनम् ३७

२६ शूद्रस्य विशेषमाह शूद्राणामिति शूद्राणामुपवासस्थाने

५६

गस्थ्यादिषुपरिणतंसद्दहति अग्निरिंधनमिवेति द्रष्टव्योरक्षो
धर्मविदृष्टांतः ३७ अदुष्टशोधकत्वंतर्हिनिम्नादत्राह पवित्र

पतितंत्रिषुलोकेषुदेवताभिरधिष्ठितं ३८ वरुणः
श्चैवसोमश्चसोमश्चहव्यवाहनः दधिमाषस्त्वमादित्य
स्सोमःक्षीरेघृतेरविः ३९ पिबतःपतितंतोयंभाजने
मुखनिःसृतं अपेयंतद्विजातीयाभुक्त्वाचांद्रायणंच
रेत् ४० कूपेचपतितंदृष्ट्वाश्वसृगालंचमर्कटं अ
स्थिचर्मादिपतितंपीत्वामेध्याअपोद्विजः ४१ नारं
तुपंककाकविड्वराहंखरोष्ट्रकं गावयंसौप्रतीकंच
मायूरंखाड्गकंतथा ४२ वैयाघ्रमार्क्षंसैंहंवाकूपेयदि
निमज्जति तडाकस्याथदुष्टस्यपीतंस्यादुदकंयदि ४३
प्रायश्चित्तंभवेत्पुंसःक्रमेणैतेनसर्वशः विप्रःशुध्येत्त्रि
रात्रेणक्षत्रियस्तुदिनद्वयात् ४४ एकाहेनतुवैश्य
स्तुशूद्रोनक्तेनशुध्यति ४५ परपाकनिवृत्तस्यपरपा
कारतस्यच अपचस्यतुभुक्तान्नंद्विजश्चांद्रायणंचरेत्
४६ अपचस्यचयद्दानंदातुरस्यकुतःफलं दातापि
ग्रहीताचद्वौतौनिरयगामिनौ ४७ गृहीतादिनि
मारभ्यपंचयज्ञान्ननिर्वपेत् परपाकनिवृत्तोसौमुनि
भिःपरिकीर्तितः ४८ पंचयज्ञान्स्वयंकृत्वापरान्नेनोप
जीवति सततंप्रातरुत्थायपरपाकरतस्तुसः ४९

ति वरुणाद्यधिष्ठितत्वेनत्रिषुलोकेषुपावनं स्नानादिनापि निर्

पाक इत्यस्य लक्षणमाह गृहस्थस्येति ददातीति शेषः निर्देशः
ईदृशीं नीशब्दमित्यादावन्यपरत्वस्यापि दर्शनात् गार्हस्थ्यमास्थितो
पञ्चदानवर्जितोऽपपच इत्यर्थः यो हि हित्वा विवाहाग्निं गृहस्थ इति

गृहस्थधर्मो यो विप्रो ददाति परवर्जितः ऋषिभिर्धि
र्मतत्त्वज्ञैरपचः परिकीर्तितः ५० युगे युगे तु ये धर्मा
स्तेषु तेषु च ये द्विजाः तेषां निंदा न कर्तव्या युगरूपा
हि ते द्विजाः ५१ हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं तु ग
रीयसः स्नात्वा तिष्ठन्नहः शेषमभिवाद्य प्रसादये
त् ५२ ताडयित्वा तृणेनापि कंठं बध्वापि वाससा वि
वादे वापि निर्जित्य प्रणिपत्य प्रसादयेत् ५३ अवगूर्य त्व
होरात्रं त्रिरात्रं क्षितिपातने अतिकृच्छ्रं च रुधिरे कृच्छ्रो
ऽभ्यन्तरशोणिते ५४ नवाहमतिकृच्छ्रः स्यात्पाणिपूर
न्नभोजनैः त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते
५५ सर्वेषामेव पापानां संकरे समुपस्थिते दशसाह
स्रमभ्यस्ता गायत्री शोधनं परं ५६ इतिश्री अभक्ष्य
भक्षणादिप्रायश्चित्तवर्णनमेकादशोऽध्यायः ११ दुःस्व
प्नं यदि पश्येत्तु वांते च क्षुरकर्मणि मैथुने प्रेतधूमे च स्ना
नमेव विधीयते १ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्ट
मेव च पुनः संस्कारमर्हंति त्रयो वर्णा द्विजातयः २

मन्यते अन्नं स्नानभोक्तव्यं वृथापाको हि संस्कृत इति बृहस्पतिवच
नाद् वृथापाकोऽपि च कारात् ५० नन्वेवं कलौ कस्यापि भोज्यान्नतानस्या
त्सर्वेषामेतन्मतानामत आह युगे युगे इति अयमभिसंधिः युगस्वभाव
युक्ता धर्मप्रवृत्तिः परिहार्यत्वात् तेषामनित्यत्वं प्रमादालस्यादिप्रयुक्तदो

अजिनंमेषलादंडोभैक्ष्यचर्याव्रतानिच निवर्त्तेतेद्वि
जातीनांपुनःसंस्कारकर्मणि ३ विण्मूत्रभक्षणेशुद्ध्य
र्थंप्राजापत्यसमाचरेत् पंचगव्यंचकुर्वीतस्नात्वापी
त्वाशुचिर्भवेत् ४ जलाग्निपतनेचैवप्रव्रज्यानाशके
षुच शूद्रावसितवर्णानांकथंशुद्धिर्विधीयते ५ प्रा
जापत्यद्वयेनैवतीर्थाभिगमनेन च वृषैकादशदानेन
वर्णाःशुद्ध्यंतितेत्रयः ६ ब्राह्मणस्यप्रवक्ष्यामिवनंग
त्वाचतुष्पथे सशिखंवपनंकृत्वाप्राजापत्यद्वयंचरेत्
७ गोद्वयंदक्षिणांदद्याच्छुद्धिंपाराशरोब्रवीत् मुच्यते
सर्वपापेभ्योब्राह्मणस्तंचरन्श्रुति ८ आग्नेयंवारुणंब्रा
ह्मंवायव्यंदिव्यमेतच स्नानानिपंचपुण्यानिकीर्तिता
निमनीषिभिः ९ आग्नेयंभस्मनास्नानमवगाह्यतुवा
रुणं आपोहिष्ठेतिचब्राह्म्यंवायव्यंगोरजःस्मृतं १०
यत्तुसातपवर्षेणस्नानंतद्दिव्यमुच्यते तत्रस्नात्वातुगं
गायांस्नातोभवतिमानवः ११ स्नातुंयातंद्विजंसर्वेदे
वाःपितृगणैःसह वायुभूतास्तुगच्छंतितृषार्त्ताःसलि
लार्थिनः १२ निराशास्तेनिवर्तंतेवस्त्रनिष्पीडनेकृ
ते तस्मान्नपीडयेद्वस्त्रमकृत्वापितृतर्पणं १३ रो
मकूपेष्ववस्थाप्यतिलैस्तर्पयतेपितॄन् तर्पितास्तेन
तेसर्वेरुधिरेणमलेनच १४

पुनरुपनयने. सर्वधर्मपा
तावपवदति अजिनमिति अजिनंकृष्णाजिनादिमेखलामौञ्जी

अवधूतोतियःकेशान्स्नात्वाप्रश्रवतोद्विजः आचामेद्
जलस्थोपिसबाह्यःपितृदेवते १५ शिरःप्रावृत्यकं
ठंवामुक्तकच्छशिखोपिवा विनायज्ञोपवीतेनआचां
तोप्यशुचिर्भवेत् १६ जलेस्थलस्थोनाचामेज्जलस्थ
श्चबहिःस्थले उभेस्पृष्ट्वासमाचामेदुभयत्रशुचिर्भ
वेत् १७ स्नात्वापीत्वाक्षुतेसुप्तेभुक्त्वारथ्योपसर्पणे
आचांतःपुनराचामेज्जलस्थश्चबहिःस्थले १८ क्षुतेनि
ष्ठीवनेचैवदंतोच्छिष्टेतथानृते पतितानांचसंभाषेदक्षि
णंश्रवणंस्पृशेत् १९ प्रभासादीनितीर्थानिगंगाद्याः
सरितस्तथा विप्रस्यदक्षिणेकर्णेसंतीतिमनुरब्रवीत्
२० अग्निरापश्चवेदाश्चसोमसूर्यानिलस्तथा सर्वएव
तुविप्रस्यकर्णेतिष्ठंतिदक्षिणे २१ भास्करस्यकरैःपू
तंदिवास्नानंप्रशस्यते अप्रशस्तंनिशिस्नानंराहोरन्य
त्रदर्शनात् २२ मरुतोवसवोरुद्राआदित्याश्चाथदे
वताः सर्वेसोमेप्रलीयंतेतस्माद्दानंतुसंग्रहे २३ खेल
यज्ञेविवाहेचसंक्रांतौग्रहणेतथा शर्वर्यांदानमस्त्ये
वनान्यत्रतुविधीयते २४ पुत्रजन्मनियज्ञेचतथाचात्य
यकर्मणि राहोश्चदर्शनेदानंप्रशस्तंनान्यदानिशि
२५ महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयम् ॥

प्रदोषपश्चिमौयामौ दिनवत्स्नानमाचरेत् २६ चैत्यवृ
क्षश्चितिर्यूपश्चांडालस्सोमविक्रयी एतांस्तु ब्राह्मणः
स्पृष्ट्वा सवासा जलमाविशेत् २७ अस्थिसंचयनाद
पूर्वं तु दिवा स्नानमाचरेत् अंतर्दशाहे विप्रस्य ह्यूर्ध्व
माचमनं स्मृतं २८ सर्वं गंगासमं तोयं राहुग्रस्ते दिवा
करे सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु २९ कु
शैः पूतं भवेत्स्नानं कुशेनोपस्पृशेद्द्विजः कुशेन चोद्धृतं
तोयं सोमपानसमं भवेत् ३० अग्निकार्यात्परिभ्रष्टाः सं
ध्योपासनवर्जिताः वेदं चैवानधीयानाः सर्वे ते वृषलाः
स्मृताः ३१ तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः
अध्येतव्योप्येकदेशो यदि सर्वं न शक्यते ३२ शूद्रान्नर
सपुष्टस्याप्यधीयानस्य नित्यशः जपतो जुह्वतो वापि
गतिरूर्ध्वा न विद्यते ३३ शूद्रान्नं शूद्रसंपर्कः शूद्रेण च
सहासनं शूद्रात्ज्ञानागमश्चापि ज्वलंतमपि पातयेत्
३४ यः शूद्रात्पाचयेन्नित्यं शूद्री च गृहमेधिनी वर्जितः
पितृदेवेभ्यो रौरवं याति सद्विजः ३५ मृतसूतकपुष्टांगं
द्विजं शूद्रान्नभोजिनं अहमेतन्न विजानामि कां कां योनिं
गमिष्यति ३६ गृध्रो द्वादशजन्मानि दशजन्मानि शूक
रः श्वयोनौ सप्तजन्मानि इत्येवं मनुरब्रवीत् ३७

दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः ब्राह्मण
स्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत् ३८ मौनव्रतम
थाश्रित्यआसीनोनवदेद्द्विजः भुंजानोहिवदेद्यस्तु
तदन्नंपरिवर्जयेत् ३९ अर्द्धभुक्तेतुयोविप्रस्तस्मि
न्पात्रेजलंपिबेत् हतंदैवंचपित्र्यंचआत्मानंचैवघा
तयेत् ४० भुंजानेषुतुविप्रेषुयोग्रेपात्रंविमुंचति सम्मू
ढस्तुपापिष्ठोब्रह्मघ्नःसउच्यते ४१ भोजनेषुचति
ष्ठस्तुस्वस्तिकुर्वंतियेद्विजाः नदेवास्तृप्तिमायांतिनि
राशाःपितरस्तथा ४२ स्नात्वानैवचभुंजीतअजम्बामि
मपूज्यचनपर्णपृष्ठेभुंजीतरात्रौदीपंविनातथा ४३
गृहस्थस्तुदयायुक्तोधर्ममेवानुचिंतयेत् पोषवर्गार्थ
सिद्ध्यर्थंन्यायवर्तीसुबुद्धिमान् ४४ न्यायोपार्जितवि
त्तेनकर्तव्यंह्यात्मरक्षणं अन्यायेनतुयोजीवेत्सर्व
कर्मबहिःकृतः ४५ अग्निर्विकापिलासत्रीराजाभि
क्षुर्महोदधिः हष्टमात्राःपुनंत्येतास्तस्मात्पश्येत्तुनित्य
शः ४६ अरणीकृष्णमार्जारंचंदनंसुमणींघृतम्
तिलांकृष्णाजिनंछागंगृहेचैतानिरक्षयेत् ४७ गा
वांशतंसैकवृषंयत्रतिष्ठत्ययंत्रितम् ॥ ॥ ॥

योविप्रःशूद्रस्यदक्षिणार्थंस्तुहविर्जुहुयात्सजीवन्शूद्रोभवेत्

तानि दत्तानि हि तु गोचर्मदानं विधातुं तल्लक्षणमाह गवामिति सैकवृषभकं
वृषभसहितं त्रयं त्रिंशत् स्वच्छंदं तस्माद्दशगुणा भूमिर्गोचर्म उच्यते मनसु
दशहस्तेन दंडेन त्रिंशत्तत्र शतं पुनः पंचचाभ्यधिकं कृत्वा एतद्गोचर्म

तस्मिन्नं दशगुणीतं गोचर्म परिकीर्तितं ४८ ब्रह्मह
त्यादिभिर्मर्त्यो मनोवाक्कायकर्मजैः एतद्गोचर्मदा
नेन मुच्यते सर्वपातकैः ४९ वापीकूपतडागाद्यैर्वा
जपेयशतैर्मखैः गवां कोटिप्रदानेन भूमिहर्ता न शु
द्ध्यति ५० कुटुंबिने दरिद्राय श्रोत्रियाय विशेषतः
यद्दानं दीयते तस्मै तद्दानं शुभकारकं ५१ अष्टादश
दिनादर्वाक् स्नानमेव रजस्वला अत ऊर्ध्वं त्रिरात्रं
स्यादुशना मुनिरब्रवीत् ५२ युगं युगद्वयं चैव त्रियु
गं च चतुर्युगं चांडालसूतिकोदक्यापतितानामधः
क्रमात् ५३ ततः सन्निधिमात्रेण सचैलं स्नानमाच
रेत् स्नात्वावलोकयेत्सूर्यमज्ञानात्स्पृशते यदि ५४
विद्यमानेषु हस्तेषु ब्राह्मणो ज्ञानदुर्बलः तोयं पिब
ति वक्त्रेण श्वयोनौ जायते ध्रुवं ५५ यस्तु क्रुद्धः पुमान्

लक्षणं ह<br>डेन त्रिंशद् | ॥ ब्रूयाज्जायां याहि त्वं गम्यतां | दशहस्तेन दं<br>डा निवर्तन

तान्येव दशगोचर्मदाता पापैः प्रमुच्यते इति मतभेदाद्द्वेध्यन्तात्मः
ग्रहणान्न दोषः ४८ तद्दानमाह ब्रह्महत्यादिभिरिति ब्रह्महत्यादि
भिरित्यादिशब्दात्सुरापानसुवर्णस्तेयगुरुतल्पगमनानां ग्रहणं [illegible]
[illegible] महापातकानि [illegible] शब्देन [illegible] ग्रहणं सर्व

अहंदुष्कृतकर्मावैमहापातककारकः गृहद्वारेषुति
ष्ठामिभिक्षार्थीब्रह्मघातकः ६६ गोकुलेषुवसेच्चै
वग्रामेषुनगरेषुच तपोवनेषुतीर्थेषुनदीप्रस्रवणे
षुच ६७ एतेषुख्यापयंलोकःपुण्यंगत्वातुसागरम्
दशयोजनविस्तीर्णंशतयोजनमायतं ६८ रामचंद्र
समादिष्टनलसंचयसंचितं सेतुंदृष्ट्वासमुद्रस्यब्रह्म
हत्यांव्यपोहति ६९ यजेतवाश्वमेधेनराजातुपृथिवी
पतिः सेतुंदृष्ट्वाविशुद्ध्यात्मात्ववगाहितसागरं ७० पु
नःप्रत्यागतोवेश्मवासार्थमुपसर्पति सपुत्रःसह
भृत्यश्चकुर्याद्ब्राह्मणभोजनं ७१ गाश्चैवैकशतंदद्या
च्चतुर्विधेषुदक्षिणां ब्राह्मणानांप्रसादेनब्रह्महा
विमुच्यते ७२ विंध्यादुत्तरतोयस्यनिवासःपरिकीर्ति
तः पराशरमतंतस्यसेतुवंधस्यदर्शनं ७३ सवन
स्यांस्त्रियंहत्वाब्रह्महत्याव्रतंचरेत् मद्यपश्चद्वि
जःकुर्यान्नदींगत्वासमुद्रगां ७४ चांद्रायणेतपश्ची
र्णेकुर्याद्ब्राह्मणभोजनं अनडुत्सहितांगांचदद्या
द्विप्रेषुदक्षिणां ७५

लेषिति ग्रामाद्व ... हिःकल्पितोनिवासोगोकुलं कतिपयनिवासोग्रामः चातुर्वर्ण्यानेकजनवासोनगरी मुन्यादिनिवासस्तपोवनं देवनद्यां तीर्थं देवस्थानादि प्रस्रवणं जलनिर्गमपर्वतादिस्थानं तत्रवसेत् ६७ तत्रापिस्वेनःख्यापये

तापीत्वा शुद्ध्यर्थं तामेव क्वथमनाग्निसमस्पर्शां पिबेत् तेनहि का
मभिकयोः शुद्ध्यति सुरां पिबेदिति जलं पिबेदिति जलादेरुपलक्ष
णं सुरायस्तु सुरां तप्तां पयो वा जलमेव वा तप्तं गोमूत्रमाज्यं वा पीत्वा वि
शुद्ध्यतीति वृद्धपराशरवचनात् ७६ सुवर्णस्तेयप्रायश्चित्तमाह अप

सुरापानं सकृत्कृत्वा अग्निवर्णां सुरां पिबेत् स पावयेत्
दात्मानमिह लोके परत्र च ७६ अपहृत्य सुवर्णं तु
ब्राह्मणस्य ततः स्वयं गृहीत्वा मुशलमादाय राजानं
वधाय तु ७७ ततः शुद्धिमवाप्नोति राज्ञा मुक्तोऽथ
वा च कामात्स्पृष्ट्वा तां यस्मान्नान्यथा वधमर्हति
७८ आसनाच्छयनाद्यानात्संभाषात्सहभोजनात्
संक्रामन्तीह पापानि तैलबिन्दुरिवाम्भसि ७९ चान्द्रा
यणं यावकं च तुलापुरुष एव च गवां चैवानुगमनं
सर्वपापप्रणाशनं ८० एतत्पाराशरं शास्त्रं श्लोका
नां शतपंचकं द्विनवत्या समायुक्तं धर्मशास्त्रस्य संग्रह

हृत्य सुवर्णमिति ब्राह्म | ह: ८१ | ॥ णस्वामिकं षोडशमाष
कादन्यं न हृत्वा शुद्धि | | कामः स्वयमेव मुशलमा
दाय स्वयं वधाय गच्छेत् राज्ञा निहतो मुक्तो वा शुद्ध्यति षट्त्रिंशन्मतेप्र
माणभेदेन प्रायश्चित्तभेदात् वालाग्रमात्रेऽपहृते प्राणायामं समाचरे
त् लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः राजसर्षपमात्रे च प्राणा
यामचतुष्टयं गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये गौरसर्षपमा
त्रे तु सावित्रीं वै दिनं जपेत् यवमात्रे सुवर्णे च प्रायश्चित्तं दिनत्रयं सुवर्णे
कृष्णलं हीकमपे[illegible] कृच्छ्रसांतपनं कुर्यात्तत्पापस्य वि
शुद्धये अपहृत्य सुवर्णस्य माषमात्रं द्विजाधमः गोमूत्रयावकाहार

स्त्वनीतिः पिणाकाद्या
मासोत्रास्मृतिवाक्यनिवासरः
यवाग्नितलपवाशास्त्रक्ष्यः सा
मोऽयं यत्र्यो यवाग्नि राजः
आसादिके कस्यापथा काम उ
लापत्र्यमरागेयं श्रेयः पं
शाहिकःतुनि नत्रायिणिकं
लाबलिः आचामाक्षः
पदंत्रदद्यि उदकं मिश्रं

अथ शौचाचारांश्च शिक्षयेदिति वचनादेतदध्ययनस्यानि
त्यफलप्रदर्शनेन काम्यत्वमपीत्यभिधातुमाह यथेति अध्य
नमध्ययनक्रियातत्कर्मीभूतानि वेदादीनि तद्विधिर्नित्यानि तथे
मपि नित्यं तथापि स्वर्गकामिना प्रयत्नेनाध्येतव्यं स्वर्गश्च पुन
र्नसंभिन्नंत्वयग्रस्तमनंतरं अभिलाषोपनीतं यत्सुखं तत्स्वः पद

यथाध्ययनकर्म्माणि धर्म्मशा।
स्त्रमिदं तथा अध्येतव्यं प्रयत्ने
न नियतस्स्वर्गकाम्यया ८२ इ
ति श्रीपाराशरे धर्मशास्त्रे महाप
ताकप्रायश्चित्तं नाम द्वादशोध्यायः

स्पदमिति वचनात्मोक्ष एव तत्कामेनेत्यर्थः तदुक्तं बृहन्नारदीये
पराशरोदितं शास्त्रं चातुर्वर्ण्याश्रमाय च वेदितव्यं प्रयत्नेन सदाध्येय
द्विजातिभिरिति तस्य च पर्वमात्रेऽनध्यायेऽनात्यन्तं गुरुनध्याया नचापि
नैतिहासपुराणयोः न धर्मशास्त्रेष्वन्येषु पर्वन्येतानि वर्जयेदिति बो
धवचनात् इतिश्री॰ धर्मशास्त्रे विद्वन्मनोहरे धरणीधरोद्धृते धर्मरत्ने द्वाद: